न्तीति" इत्येतेन मन्त्रेण मध्यमपिण्डं प्राश्नीयात् । ततस्तूष्णीमु-ल्मुकमग्नौ क्षिपेत् । सकृदाच्छिन्नांश्च कुशानग्नौ क्षिप्त्वा अप्रद-क्षिणं पर्युक्षेत् । दशकादयो ये पुत्रास्ते एकैकस्मिन्प्रदेशे द्वौ पि-ण्डौ ददाति येन जातो यस्य च सञ्जात इति । जीवत्पितृकेण पिण्ड-पितृयज्ञो न कर्त्तव्यः । अथ करोति पितॄणां होमान्तं वेति । इदं च कर्म तन्त्ररहितं यावदुक्तं भवति । आहुतिर्हुत्वा शेषमपसव्येनेति दक्षिणायामपूपं जुहोति । अष्टकायै ग्रहणमुपलेपनोल्लेखनादिद्रव्यप्रो-क्षणान्तं कृत्वा पिष्टमयान् कपालपक्वांस्त्रीनपूपान् कुर्य्यात् । अपरे त्वाचक्षते घृतपूपाः कर्त्तव्याः । अन्यतरजातीयान पूपानपक्का करो-ति वा । आधाराज्यभागान्ते कृत्वा "ऊढश्चातिरात्रश्च सद्यश्चक्रीञ्छ-न्दसा सहाअपूपकृदष्टके नमस्तेसुमनामुखिस्वाहे" त्येनेन मन्त्रेणा-पूपावदानं समवत्तधान्यां कृत्वा गृहीत्वा चरुधर्मेण जुहोति । "य-स्मादेवस्वतोयम" इति स्विष्टकृतं हुत्वा महाव्याहृतिसर्वप्रायश्चि-त्तादितन्त्रशेषं समापनीयमिति ॥ मध्यमायां माघ्यवर्षे च गोपशुर-जः स्थालीपाको वेत्युक्तम् । एतेषामसंभवे "एषामिष्टके" त्यनेन मन्त्रेण अकारान्तेन परगोरेकस्य तृप्तये यवसं दद्यात् । अथ वा अनेनैव मन्त्रेण तृणबहुलस्थाने तृणदहनं कर्त्तव्यम् ॥

इति अहिच्छत्राविषये कौसुम्बरवास्तव्यवासुदेवकृतशाङ्खाय-यनगृह्यसङ्ग्रहे तृतीयोऽध्यायः समाप्तः ॥

श्राद्धं वक्ष्यामः । पूर्वेद्युर्ब्राह्मणान् वेदविदः पञ्च निमन्त्र्या-ऽभावे त्रीन् वा एकमेव वा ततोऽपराह्णे पिण्डीपतृयज्ञवत्ततो ब्रा-ह्मणानाहूय परिश्रिते प्रदेशे द्वौ प्राङ्मुखौ त्रय उदङ्मुखाः कार्याः। प्राङ्मुखानां सर्वं यज्ञोपवीती प्रदक्षिणोपचारश्च कुर्यात् । उदङ्मु-खानां सर्वं प्राचीनावीती विपरीतोपचारं च कुर्यात् । सर्वं च दै-वपूर्वं कर्त्तव्यम् । दर्भा आसनार्थाः प्राङ्मुखानामृजवः । उदङ्मु-

स्वानां द्विगुणीकृत्य दातव्याः। यदि त्रयो ब्राह्मणास्ततो द्वौ प्राङ्मुखौ एक उदङ्मुखः, यदि द्वौ तत्र एकः उदङ्मुखः एकः प्राङ्मुखः, यद्येकस्तत्र उदङ्मुखः प्राङ्मुखब्राह्मणस्थाने अग्निः स्थापयितव्यः। दर्भासनादनन्तरं यजमानो ब्राह्मणाश्च वाग्यमनं कुर्युः। तत्र आवाहनम्। "विश्वेदेवानावाहयिष्ये" इत्यनेन मन्त्रेण प्राङ्मुखं पृच्छत्येकम्। ततः "आवाहये"त्यनेन मन्त्रेणाभ्यनुज्ञातः "विश्वेदेवासः आगत"इत्यनेन मन्त्रेणावाह्य ततो "विश्वेदेवाःशृणुतेमं हवम्" इति जपति। तत्र "ओषधयः समवदन्त"इत्यनेन मन्त्रेणा सर्वतो वेष्टयति। ततः "पितॄनावाहयिष्ये"इत्यनेनोदङ्मुखान् पृच्छति। "आवाहय" इत्यनुज्ञातः "उशन्तस्त्वा निधीमही"त्यावाह्य तत "आयन्तु नः पितरः अपहता असुरा रक्षांसि वेदिषद" इति तिलैरवकीर्य ततः पलाशैकङ्कतकाश्मर्यबिल्वखादिरोदुम्बराणामन्यतमकाष्ठकृतानि नवानि पर्णपुटानि वा मृण्मयानि वा मणिरजतसुवर्णताम्राणामन्यतमद्रव्यकृतानि पितृसमानसंख्याकानि पात्राणि कृत्वा द्वौ द्वौ कुशौ तिस्रस्तिस्रो वा उपर्यन्तर्धाय पात्रं "शंनोदेवीरभिष्टय" इत्यनेन मन्त्रेणाद्भिरापूरयित्वा "तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः प्रत्नमद्भिः पृक्तः स्वाहाकारेण देवान् प्रीणाहि नः स्वाहे"त्यनेन मन्त्रेण यवैरवकीर्य प्राङ्मुखाभ्यां ब्राह्मणाभ्यां दक्षिणहस्तविकीकृत्य उदपात्रकुशौ प्राङ्मुखौ दत्वा तिस्रो वा ततो "यादिव्या आपः पयसा संबभूवुर्या आन्तरिक्षा उत पार्थिवीर्याः हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शं स्योनाः सुहवा भवन्तु" इति पठित्वा "विश्वेदेवा एष वोऽर्घ्यः" इत्यनेन मन्त्रेण निनयेत्। ततो दक्षिणामुखो भूत्वा दक्षिणाग्रकुशानेकस्य ब्राह्मणस्य हस्ते दत्वा ततो "यादिव्या आप"इत्येवमादिकं मन्त्रं पठित्वा "द्रुतद्रुतेऽर्घ्यं"मित्यनेन मन्त्रेण पितृतीर्थेन ब्राह्मणहस्ते निन-

ष्येदेवं पितृपितामहप्रपितामहानां नामान्युच्चार्योच्चार्य एकैकस्य ह-स्तेऽर्घ्यं दद्यात्। यदि ब्राह्मणा बहवो निमन्त्र्यन्ते ततो हस्तानेकीकृत्या-र्घ्यं दातव्यम्। ततः पुत्रकामः "शुन्धन्तांलोकाः पितृषदनाः" इत्यने-न मन्त्रेण मुखं विमार्ष्टि। ततोऽर्घ्यपात्राणि पात्रान्तरे निवेशयित्वा ततः "पितृभ्यः स्थानमसी" त्यनेन मन्त्रेण तत्पात्रमध्ये कुर्यात्। ततो गन्धपुष्पधूपादीनि यथाविभवं प्रदाय गृहादेव सिद्धं घृताक्त-मन्नं गृहीत्वा "अग्नौकरिष्ये" इति ब्राह्मणान् पृच्छति। ततः "कु-रुष्वे" ति ब्राह्मणैरनुज्ञातः परिसमूहनादिहोमान्तं सूत्रैः पिण्डपितृ-यज्ञवत् कृत्वा हुतशेषं ब्राह्मणहस्तेषु ददाति। ततस्तस्मिन्नेव प्र-देशे यस्मिंकस्मिंश्चिद्गृहे सिद्धं तदन्नमानीय परिवेषयित्वा ततः "पृ-थिवीतेपात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमिस्वाहा" इत्यनेन मन्त्रेण पात्रमालभेत्। तत "इदं विष्णुर्विचक्रमे" इति अंगुष्ठग्रहणं कृत्वा अनेऽवगाह्य ततो "विश्वेदेवाश्तद्वोऽत्र" मिति प्रा-ङ्मुखाभ्यां ब्राह्मणाभ्यां कल्पयित्वा ततः "देवदत्तपतचेऽमयं-चस्वामन्नातु" अनेन प्रकारेण पितृपितामहप्रपितामहानां नामा-न्युच्चार्योदङ्मुखब्राह्मणेभ्यः पात्राणि कल्पयित्वा ब्राह्मणानां भोजनानुज्ञां ददाति। ततो भुंजानेषु ब्राह्मणेषु महाव्याहृतय-श्चतस्रः " तत्सवितुर्वृणीमहे " इत्येका "मधुव्वाताऋतायते" इति तिस्रः " उदीरतामवरउत्परास " इति चतुर्दश " स्वादिष्ठयामं-दिष्ठये " ति च शक्तितो जपेत्। "सहस्रशीर्षेति" षोडश अन्या-नि च पवित्राणि शक्तितो जपेत्। ततस्तृप्तेषु ब्राह्मणेषु " तृप्ता-स्थ " इति पृच्छति। ततो ब्राह्मणा " तृप्ताःस्म " इति ब्रूयुः। ततः " शेषमन्न " मितिपृष्टा ब्राह्मणा " इष्टेभ्यः " इति ब्रूयुः। ततोऽपोशानं दत्वा पिण्डान् दद्यात्। ततः सर्वमन्नमेकस्मिन्पात्रे कृत्वा " अपहता असुरारक्षांसिवेदिषद " इत्यारभ्य सकृदाच्छि-

श्रानुमहरणान्तं पिण्डपितृयज्ञवत्करोति । ततः स्वस्य पश्चिमेन तत्पत्नीनां किञ्चिदन्तर्द्धाय भर्तॄणामिव पिण्डदानं स्यम् । कथम् ? । "मङ्गलदेवि अवनेनिक्ष्वयेचत्वामत्रानु, स्त्देविएतत्तेपिण्डोयेचत्वामत्रानु " इति अनेन प्रकारेण । होमादनन्तरं पिण्डदानमिच्छन्ति । ततः आचान्तेषु " " मीयन्ता " मिति माङ्मुखौ कल्पयित्वा " देवदत्तस्तृप्यता " ति पितृपितामहप्रपितामहानां नामान्युच्चार्योच्चार्योदङ्मुखान् कल्पयित्वा शक्तितो दक्षिणा दत्वा " वाजेवाजेवतवाजिनो " इति विसर्जयेत् । अस्मिन् कर्मणि यत्शाङ्खायने नोक्तं तत्सर्वमन्यतोग्राह्यमिति ॥

एकोद्दिष्टश्राद्धं वक्ष्यामः । वैश्वदेवकं कर्म कुर्यात् । उदङ्मुखा ब्राह्मणा उपवेश्याः । पूर्ववदुपचारः । विशेषस्तूच्यते । आवाहनमग्नौकरणं च न कुर्यात् । एकं पवित्रमेकं चार्घ्यं पत्नीवर्जमेकः पिण्डः "स्वदित " मितितृप्तिप्रश्नः "उपतिष्ठता" मित्यक्षय्यस्थाने " अभिरम्यता " मितिविसर्जनम् " अभिरतास्म " इति ब्राह्मणा ब्रूयुः । एवं पितर्युपरते एकादशेहनि कृत्वा तावन्मृताहनि मासे मासिकं कर्त्तव्यं यावत्संवत्सरोऽपूर्णः । ततश्चत्वारि पात्राणि गन्धोदकेन पूरयित्वा त्रीणां पितृणामेकं प्रेतस्य " येसमानाः समनसः पितरोयमराज्ये तेषां लोकःस्वधानमोयज्ञोदेवेषुकल्पतां येसमानाः समनसो जीवा जीवेषुमामकाः तेषां श्रीर्मेकल्पतामस्मिंल्लोके शतं समाः " इति मन्त्रद्वयेन प्रेतपात्रं पितृपात्रेष्वासिञ्चति । पिण्डोप्येवमेव कर्त्तव्यः । एवं सपिण्डीकरणं कृत्वा ततः पार्वणे पितृपितामहप्रपितामहेभ्यो दद्यात् । पैतृकस्तु प्रपितामहं वर्जयेत् । एतच्च सपिण्डीकरणं पुत्रैः करणीयम् । श्राद्धं वक्ष्यामः । सर्वं यज्ञोपवीतिना पितृकर्त्तव्यम् । अपुत्रस्य संवत्सरे

ज्ञानि मान्त्रैः एकोद्दिष्टं कर्त्तव्यम् ॥

आभ्युदयिकं श्राद्धं वक्ष्यामः । पैतृकमन्त्रा न जप्याः ऋजवो दर्भा यवैस्तिलार्थः । तृप्तिप्रश्ने "संपन्न" मितिपृच्छेत् । दधिबदराक्षतमिश्राः पिण्डाः । "नान्दीमुखाः पितरः प्रीयंता"मित्यक्षय्यस्थाने । शेषं समानं पार्वणेन ।

अथोपाकरणं वक्ष्यामः । ओषधीनां प्रादुर्भावे हस्तेन श्रवणेन वा । अपरे तु प्रादुर्भावकाल इति पठन्ति । तेषामप्रादुर्भूतास्वप्योषधीषु हस्तश्रवणाभ्यामन्यतरस्मिन्नक्षत्रे कर्त्तव्यम् । अत्र स्तरणाद्याज्यभागा निर्विकल्पाः । आवसथ्याग्नावुपलेपनोल्लेखनान्तं कृत्वा ततः पवित्रोत्पादनाद्याघाराज्यभागान्तं कृत्वा तत अक्षण्वन्तः सक्तवो धानाश्च पत्रा दधि घृत चतुष्टयमेकीकृत्यावदानधर्मेण "अग्निमीळेपुरोहित"मित्यारभ्य स्वाहाकारान्तैर्मन्त्रैः प्रत्यृच जुहुयात् आपरिसमाप्तेः एवमेके आहुः । सूक्तानुवाकाद्याभिरिति वा । पूर्वपक्षस्य पक्षान्तरमेतत् । अध्यायार्षेयाभिरिति माण्डूकेयमतम् । श्रुतौ प्रायेण सर्वाणि मतानि पूर्वपक्षीकृत्य कौषीतकिमतमेव सिद्धान्तो भूतः अस्मापि शिष्टैस्तदेवाङ्गीकृतः । आज्यभागानन्तरं शिष्या अन्वारभन्ते । मन्त्रोच्चारणमाचार्येण सहैव कुर्वन्ति । " अग्निमीळेपुरोहित"मित्यारभ्य "तच्छंयोरावृणीमहे" इति यावत्सूत्रकारेणैव कृता पद्धतिः । स्विष्टकृतं हुत्वा हुतशेषादेकदेशं गृहीत्वा आचार्यः शिष्यो गृहस्यमंत्रोच्चारणसमये "दधिक्राव्णोअकार्ष"मित्यनेन मंत्रेण प्राश्नाति । तत आचम्योपविश्य महाव्याहृतिसावित्रीवेदादीनि स्वस्त्ययनानि जपित्वा ततः शिष्या आचार्याय किंचिद्दत्वा "स्वस्तिभवंतोब्रुवंतु "ति वदंति । तत आचार्य"ॐस्वस्ती " ति ब्रूते । ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापयित्वा विराममनध्यायं कुर्वन्ति ॥

उत्सर्गकर्म वक्ष्यामः । माघशुक्लप्रतिपदि प्रागवासतः क्यां दिशि यवगोधूमादिसम्पन्नं प्रदेशं गत्वा आचार्यः कृतशौचः "उदुत्यंजातवेदस"मिति त्रयोदश "चित्रंदेवानामुदगा"दिति च "नामामित्रस्यवरुणस्यचक्षस" इति द्वादश "सूर्योनोदिवस्पातु" तिपञ्च एता ऋचो जपित्वा ततः "शासइच्छामहेअसी"तिपञ्चर्चैः पुरस्ताद्वारस्य प्रदक्षिणं मृल्लोष्टान् प्रत्यृचं क्षिपेत् । उपरि पञ्चपञ्च । तत आचार्यः सशिष्य ऋषींश्छन्दांसि देवताः श्रद्धामेधे च तर्पयित्वा ततः पितृपितामहप्रपितामहान् स्वान् स्वान्तर्पयन्ति । ततः द्विसप्तधान्याप्साध्येयम् । तर्पणविधिं चोपरिष्टाद्वक्ष्यामः । अपरे तु व्याचक्षते । ब्राह्मणान् भोजयित्वा ऋष्यादींस्तर्पयेत् । यद्यवश्य पठेत्ततो ऽहोरात्रं क्षपयित्वा पठेत् । अस्मिन्नवसरेऽनध्यायाः पठिताः । ते च सूत्रानुक्रान्ता एव कर्त्तव्याः आनुपूर्व्यां प्रयोजनमेव नास्तीति पद्धतिर्न कृता ॥

अध्यापनविधिं वक्ष्यामः । अनसूयवो ब्रह्मचारिण ऋजवः सन्तः संयतेन्द्रियाः शुचयोऽध्ययनशीला मेधाप्रतिभान्यायोपगता एवंलक्षणाः शिष्या अध्यापयितव्याः । आचार्यः प्राङ्मुख उपविशति उदङ्मुखो वा, दक्षिणतः शिष्य उदङ्मुखः प्रत्यङ्मुखो वा । शेषा आचार्याभिमुखा यथावकाशमुपविशन्ति । ततः " अधीहिभो " इत्याचार्यः शिष्यं प्रचोदयति । ततः आचार्येण निगदिते ओङ्कारं कृत्वा शिष्याः पठन्ति । ततः सतते पठित्वा समाप्ते पाठके "विरतास्मभो" एवमुक्त्वा भोक्तुं गच्छामो मूत्रपुरीषे कर्तुं गच्छाम इति स्वं स्वं प्रयोजनं कथयन्ति "विरमास्म" इत्येतस्य स्थाने । विसृष्टविरामास्तावत्स्युः पठतामन्तरेण पाठको गच्छेत् । न चान्तरेण गन्तुं दातव्यम् । यदि किञ्चन्मार्जारादिकमन्तरेण गच्छेत् त्रिरात्रमुपोष्याहोरात्रं वा पुनः सावित्रीं जपेत् । ब्राह्मणेभ्यः कि

[illegible]रात्रमुपरम्य अध्ययनम् ॥

... उदकतर्पणं वक्ष्यामः। तत्र समावृत्तस्य भवति। स्नात्वा [illegible] "अग्निस्तृप्यतु, वायुस्तृप्यतु, सूर्यस्तृप्यतु, विष्णुस्तृप्यतु, प्रजापतिस्तृप्यतु, विरूपाक्षस्तृप्यतु, सहस्राक्षस्तृप्यतु, सोमः, ब्रह्मा, वेदाः, ऋषयः, सर्वाणि छन्दांसि, ओङ्कारः, वषट्कारः, महाव्याहृतयः, सावित्री, यज्ञाः, द्यावापृथिवी, नक्षत्राणि, अन्तरिक्षं, अहोरात्राणि, सङ्ख्याः, सन्ध्या, समुद्राः, नद्यः, गिरयः, क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसः, नागाः, वयांसि, सिद्धाः, साध्याः, विप्राः, यक्षाः, रक्षांसि, भूतान्येवमन्तानि तृप्यन्तु, श्रुतिं तर्पयामि, स्मृतिं तर्पयामि, धृतिं तर्पयामि, रतिं तर्पयामि, मतिं तर्पयामि, श्रद्धामेधे, धारणां च, गाः, ब्राह्मणं, स्थावरं, जङ्गमानि, सर्वभूतानि तृप्यन्तु"। इति यज्ञोपवीती। अथ प्राचीनावीती पित्र्यां दिशमीक्षमाणः "शतर्चिनः, माध्यमाः, गृत्समदः, विश्वामित्रः, जमदग्निः, वामदेवः, अत्रिः, भरद्वाजः, वसिष्ठः, प्रगाथाः, पावमानाः, क्षुद्रसूक्ताः, महासूक्ताः, सुमन्तुः, जैमिनिः, वैशम्पायनः, पैलः, सूत्रभाष्यकृतः, गार्ग्यबभ्रुबाभ्रव्यमण्डुमाण्डव्याः, गार्गी, वाचक्नवी, वडवा, प्रातिथेयी, सुलभा, मैत्रेयी, कहोलः, कौषीतकिः, महाकौषीतकिः, सुयज्ञः, शाङ्खायनः, आश्वलायनः, ऐतरेयः, महैतरेयः, भारद्वाजः, जातूकर्ण्यः, पैङ्ग्यः, महापैङ्ग्यः, बाष्कलः, गार्ग्यः, शाकल्यः, माण्डूकेयः, महादमनः, उद्दालकः, औदवाहिः, सौयामिः, शौनकिः, शाकपूणिः, ये चान्ये चाचार्यास्ते सर्वे तृप्यन्तु" एवं प्रत्येकमुदकाञ्जलिं दत्त्वा ततः पितृपितामहप्रपितामहमातामहादीनामाचार्यान्तं तर्पणं करोति। तद्यथा "देवदत्तस्तृप्यतु, मित्रभूतिस्तृप्यतु, यज्ञदत्तस्तृप्यतु" इति। ततः "पितृवंशास्तृप्यतु" इत्यञ्जलिं क्षिपेत्। अस्मिन्नवसरे न नर्मा

क्षियमीक्षेत इत्येवमाद्याचारः पठितः समस्त एव कर्त्तव्यः ।
आनुपूर्व्येण प्रयोजनमेव नास्तीति पद्धतिर्न कृता ॥

कृषिकरणकर्म वक्ष्यामः । रोहिण्यां हलयोक्ककर्णमालवादीनां मारम्भे यत्कर्म तदन्येन ब्राह्मणेन कारयितव्यम् । गृहादेव सिद्धं हविष्यमन्नं गृहीत्वा क्षेत्रस्य पुरस्तात् " महीद्यौः पृथिवीचनइमंय- ज्ञ " मिति मन्त्रेण नमस्कारान्तेन बलिं दत्वा ततो " नमोद्यावा- पृथिवीभ्यां होतृभ्यां पूर्वसूभ्यां विश्वकर्मणोनूपोमेष्टमेपातमाहिंसि- ष्टं मामा सन्ताम् " मिति प्रतिदिशमुपस्थानं कृत्वा वापयति ॥

उदकतरणकर्म वक्ष्यामः । यस्यां दिश्युदकमागच्छति तस्यां दिश्यभिमुखो भूत्वा " सर्वांसापित्रेविश्वकर्मणोमनुहविर्जुषना " मिति जपित्वा ततः " समुद्रायवैणवेनमः स्वाहा, नमोवरुणायध- र्मपतयेस्वाहा, सर्वाभ्योनदीभ्यः स्वाहा " इति उदकाञ्जलीस्त्री- नप्सु जुहोति । अथ वा स्थावराय । तत एभिरेव मन्त्रैः सलिलमू- र्द्ध्वमुत्क्षिप्य ततः तरेत् । तत्भयं यदि शङ्केद्वासिष्ठं सूक्तं किञ्चि- ज्जपित्वा ततः "समुद्रज्येष्ठाः सलिलस्यमध्या" दिति जपेत् । अ- परे त्वेवं वर्णयन्ति । " समुद्रज्येष्ठा " जपेदिदमेव वासिष्ठमिति ॥

श्रावणीकर्म वक्ष्यामः । तत्र श्रवणे पूर्णमास्यां कर्त्तव्यम् । अत्र स्तरणाद्याराज्यभागा निर्विकल्पाः । उपलेपनोल्लिखनाद्याघा- राज्यभागान्तं कृत्वा ततोऽक्षतसक्तूनां स्थालीपाकस्य जुहुयात् । "विष्णवेस्वाहा, श्रावण्यैपौर्णमास्यैस्वाहा, वर्षाभ्यः स्वाहे " ति हुत्वा ततः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं स- मापनीयमिति ॥

सर्पवत्युपकर्म वक्ष्यामः । अत्र स्तरणाघाराज्यभागा नि- र्विकल्पाः । अस्यामेव पौर्णमास्यां गृहमेव बाह्यतः कृत्वा ततः अक्षतसक्तूंश्च घृतेन मिश्रयित्वा अवदानधर्मेण दर्व्याना

सर्पाणां पूर्वार्धे जुहोति । "देवेभ्यः सर्पाधिपतये स्वाहा, अदूभ्यः स्वाहे"ति पश्चार्द्धेन जुहोति । तत एताभ्यामेव मन्त्राभ्यामधिपतये पुरस्तात्पुरस्तात् सर्पेभ्यः पश्चादेवं षडाहुतीर्हुत्वा ततोनेनैव प्रकारेणान्तरिक्षाणां दिव्यानां पार्थिवानां षट्षडाहुतयो हूयमानाश्चतुर्विंशतिर्भवन्ति । होमानन्तरमग्नेरुत्तरतः प्रागग्रेषु कुशेषूदकुम्भं नवं प्रतिष्ठाप्य ततश्चतुर्ष्वपि स्थानेषु कुशान् भूमौ निधाय ततो "दिव्यानां सर्पाणामधिपतिरवनेनिक्ता"मित्यनेन मन्त्रेणोदकुम्भस्योत्तरतो ये कुशा निहिताः तेषां पूर्वार्द्धे हस्तेनोदकमासिञ्चति । "दिव्याः सर्पा अवनेनिजता" मित्यनेन मन्त्रेण यथोक्तेनाप्यकारेण पश्चार्द्धे आसिञ्चति । अधिपतये पुरस्तात्पुरस्तात्त्रिः सर्पेभ्यः पश्चात्पश्चात्त्रिरेव एवं षट् भवन्ति । एवमुत्तरेष्वपि द्रष्टव्यम् । "दिव्यानां सर्पाणामधिपतिः प्रलिखतां दिव्याः सर्पाः प्रलिखन्ता" मिति फल्केनाप्सु प्रदेशेषूदकनोर्द्धेषु स्पृशति । ततो "दिव्यानां सर्पाणामधिपतिः प्रलिम्पतां सर्पाः दिव्याः प्रलिम्पन्ता"मिति सुगन्धिना विलेपनेन तथैव लिम्पति । "दिव्यानां सर्पाणामधिपतिराबध्नीतां दिव्याः सर्पा आबध्नीता"मिति सुगन्धिपुष्पाणि क्षिपति । "दिव्यानां सर्पाणामधिपतिराच्छादयतां दिव्याः सर्पा आच्छादयन्ता" मिति सूत्रतन्तुमुपहरति । "दिव्यानां सर्पाणामधिपतिराङ्क्तां दिव्याः सर्पा आञ्जता"मिति कुशतरुणेन सौवीरमञ्जनं क्षिपति । "दिव्यानां सर्पाणामधिपतिरीक्षतां दिव्याः सर्पा ईक्षन्ता"मिति आदर्शेनैवमेवेक्षयति । "दिव्यानां सर्पाणामधिपतिरेष तेवलिर्दिव्याः सर्पा एष वो बलि"रिति हविष्यमन्नं ददाति । उदकदानकंकतवेष्टनवर्णकप्रोल्लम्पनपुष्पप्रकिरणसूत्रतन्तुप्रक्षेपणाञ्जनादर्शेक्षणबलिदानानि अष्टौ पदार्थाः, दिव्यानां सर्पाणामधिपतीनां दिव्यानां च सर्पाणां षट्कृत्वोऽभ्यस्यमाना अष्टाचत्वारिंशद्भवन्ति । एकीकृतं द्वि-

नवतं शतं च भवति। एतत्कृत्वा ततः स्विष्टकृत्ततो महाव्याहृति-सर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति। अन्ये त्वेवं व्याचक्षते "दिव्यानांसर्पाणामधिपतयेस्वाहा, दिव्येभ्यः सर्पेभ्यः स्वाहेति" आहुतिद्वयमेव हुत्वा तत उदकुंभपूरणादिवलिदानान्तं कर्त्तव्यम्। चतुर्विंशत्याहुतयो न होतव्या इति। ततोऽनेनैव प्रकारेणाऽक्षतसक्तुभिर्लोकप्रसिद्धेन सर्पेभ्य उदकपूर्वं रात्रौ वाग्यतो बलिहरणं कुर्यात्। पत्नी च वाग्यता बलिमुपसादयेत्। मार्गशीर्षशुक्लचतुर्दशीं यावत् सर्पकर्म येन कृतं स "सुत्रामाणंपृथिवींद्यामनेहस"मित्यनेन मन्त्रेण शय्यामारोहते। ततश्चतुरो मासान् मंचकशायी स्यादिति॥

आश्वयुजीकर्म वक्ष्यामः। अत्र स्तरणाघाराज्यभागा निर्विकल्पाः। आश्वयुज्यां पौर्णमास्यामुपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा पायसस्य चरुः "इन्द्रायस्वाहा, अश्विभ्यांस्वाहा, अश्वयुग्भ्यांस्वाहा, आश्वयुज्यैपौर्णमास्यैस्वाहा, अश्वपतयेस्वाहा, पिंगलायस्वाहे" ति षडाहुतीराज्यस्य हुत्वा ततः क्षीरघृतविकीर्णस्य "आगावोअग्म" न्नित्यृचैः प्रत्यृचमेवमष्टावाहुतीः स्रुवेण हुत्वा ततः समवद्य स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समाप्य ब्राह्मणान् भोजयेत्। गाश्च सवत्सा एवैतांरात्रिं वासयेत्। अपरे तु व्याचक्षते। घृतमिश्रस्य दध्न "आगावोअग्म" न्नित्यष्टावाहुतयो होतव्याः॥

आग्रहायणीकर्म वक्ष्यामः। मार्गशीर्षपौर्णमास्यां येनैव कर्मणा सर्पव्रत्युपकर्म कृतं तेनैवोत्सर्गं कृत्वा ततः "शंनोमित्रः शंवरुणः"इत्यनेन मन्त्रेण पलाशशाखया गृहमध्ये भूम्येकदेशं शोधयित्वा ततः "समुद्रादूर्मिर्मधुमंउदारादि"त्यनेन मन्त्रेणाऽद्भिरभ्युक्ष्य "स्योनापृथिविभवे" त्यनेन मन्त्रेण स्तरणमास्तृणाति। ततो

वा सर्वेषां ज्येष्ठः स दक्षिणतः प्रति "प्रहन्प्रतितिष्ठामि अत्र" इत्यनेन मन्त्रेण वामपार्श्वैः परिवर्त्तते। तत्र "उदीर्ध्वजीवो आगा" इत्यनेन मन्त्रेणोत्तिष्ठति । ततस्तमूरेतां रात्रिं शेरते उपरिष्टाच्च खेच्छा इत्येतत्पूर्णपात्रं कृत्वा ततः प्रतिपदि प्रातरेव शमीपलाशपर्णकपीतकापामार्गशिरीषोदुम्बरकुशतरुणबदरीणां मुष्टिमादायोदपात्रे इत्येतत्तत्रोद्धं सहिरण्यं न क्षिप्त्वा ततः "अपनः शोशुचदघ"मित्यष्टाभि ऋग्भिः तस्मिन्नुदपात्रे तां मुष्टिं निमज्ज्य निमज्ज्य सदक्षिणपूर्वेभ्यः पाप्मानं धूमतरूपं पातयेत्। पश्चाष्टानां गृहाणामभ्यधिकं गृहं भवति। तत्र इदमेव सूक्तं पुनः प्रयोक्तव्यम्। एवं सर्वेभ्यो गृहेभ्यः सकृच्च पातयित्वा तत उदपात्रमुत्तरतो गृहस्य निनयेत्। ततः कर्त्ता दधिमधुघृतान्येकीकृत्य दक्षिणां दद्यादिति । एतत्कृत्वोपवेशनोङ्गिसनाद्याग्रायणभागान्तं करोति। अस्मिन् कर्मणि स्तरणाद्याग्रायणभागाः पाक्षिकाः। "ग्रीष्मोहेमन्त उतनावसन्तः शरद्वर्षाः सुकृतं नो अस्तु तेषामृतूनां शतशारदानां निवात एषामभये स्यामस्वाहा, अथ श्वेतवदाजहि पूर्वेण नमस्व परेण न वारुणीशिसः पर्यामयाजन्यैः स्वाहा, श्वेताय वैदार्वाय स्वाहेति, वैदार्वाय स्वाहा, तक्षकाय वैशलेयाय स्वाहे"ति आज्यस्य षडाहुतीर्हुत्वा ततः "सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयतांसुवर्षो शान्तनोवर्षा शरदः शंभवन्तुनः" इत्यनेन मन्त्रेणोपस्थानं कृत्वा ततः पाक्षिकः स्विष्टकृतो महाव्याहृतिप्रभृतिप्रायश्चित्तादितन्त्रशेषं समापनीयम्। अपरे तु क्षपानासने। आग्रहायण्यां पौर्णमास्यां तदेव मधुपर्कादि कृत्वा ततो "ग्रीष्मोहेमन्त" इत्येवमादिकर्मान्यं सर्वमनिकर्मतायां स्त्रसन्मग्राचादिति पक्षमतं पौर्णमास्यां कर्त्तव्यमिति ॥

चित्रकर्म वक्ष्यामः। अत्र स्तरणाद्याग्रायणभागा निर्विकल्पाः। चैत्र्यां पौर्णमास्यामुपवेशनोङ्गिसनादिकरणान्तं कृत्वा इन्द्राग्नि-

शुनकाश्लीमयुनादीनि यावदुपलभ्यन्ते एतानि सर्वाणि बदरीपात्रादिमयानि कृत्वा ऐन्द्राग्नी दीर्घतुम्बे लम्बोदरे पुरुषाकृती कर्त्तव्ये । रौद्रा गोलकास्तु हृत्तास्यः एतत्सर्वं पिष्टस्य कृत्वा ततः पूर्ववदाघाराज्यभागान्तं कृत्वाऽवदानधर्मेण ऐन्द्राग्नदेवश्चरुः "इन्द्राग्निभ्यां स्वाहे"ति हुत्वा ततश्चरुधर्मेणैव गोलकेभ्योऽवदानधर्मेण समवत्तधान्या कृत्वा गृहीत्वा "रुद्राय स्वाहे"ति ततः सर्वेभ्योदद्यात्ततः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति ॥

इति अहिच्छत्राविषये कौशुंवरवास्तव्यश्रीवासुदेवकृते साङ्ख्यायनगृह्यसंग्रहे चतुर्थोध्यायः समाप्तः ॥

समाप्तोऽयं ग्रन्थः ॥



श्रीगणेशाय नमः ।

# अथ कौषीतकिगृह्यसूत्रम् ।

हरिः ॐ

अथातः पाकयज्ञान् व्याख्यास्यामोऽभिसमावर्त्स्यमानो य
दन्यत् समिधमभ्यादध्यात् तमग्निमिन्धीत वैवाह्यं वा दायाद्य काल
एके प्रेते वा गृहपतौ स्वयं ज्यायान् वैवाह्यामावास्यायामन्य-
स्यां वाऽकामनो नक्षत्र एके पुरुषमुविदूकुलाम्बरीषाद्वाग्निमा-
न्यतमस्माद्वाग्निमिन्धीत सायं प्रातरेके सायमाहुतिसंस्कारोऽध्व-
र्युमत्वेप इत्याचार्याः । प्रातः पूर्णाहुतिं जुहुयाद्वैष्णव्यर्चा तूष्णीं
वा । तस्य प्रादुष्करणहवनकालावग्निहोत्रेण व्याख्यातौ । य-
ज्ञोपवीतीत्यादि च सम्भवत्सर्वम् । कल्पैकत्वात् । तदप्याहुः—

पाकसंस्था हविःसंस्थाः सोमसंस्थास्तथापराः ।
एकविंशतिरित्येता यज्ञसंस्थाः प्रकीर्तिताः ॥ ॥ १ ॥
कर्मापवर्गे ब्राह्मणभोजनम् । वयोरूपश्रुतशीलवृत्तानि गुणाः ।
श्रुतं तु सर्वानत्येति । न श्रुतमतीयात् ॥
अधिदैवमथाध्यात्ममधियज्ञमिति त्रयम् ।
मन्त्रेषु ब्राह्मणे चैव श्रुतमित्यभिधीयते ॥
क्रियावन्तमधीयानं श्रुतवृद्धं तपस्विनम् ।
भोजयेत् तं सकृद्यस्तु न तं भूयः क्षुदश्नुते ॥
यां तितर्पयिषेत् काञ्चिद्देवतां सर्वकर्मसु ।
तस्या उद्दिश्य मनसा दद्यादेवंविधाय वै ॥
नैवंविधे हविर्न्यस्तं न गच्छेद्देवतां क्वचित् ।
निधिरेष मनुष्याणां देवानां पात्रमुच्यते ॥ ॥ २ ॥

अथ दर्शपूर्णमासाः । उपोष्य प्रातर्वैश्वैतन्महादशाऽग्राणि

सूर्य आनयति स हैमकालः स्वस्त्ययनतमः । सर्वासामाहुतामन्यत्र निर्देशात् सुमनाः शुचिः शुचौ नरूप्यदेशे पूर्णविधाने चरुं स्नपयित्वा दर्शपूर्णमासदेवताभ्यो यथाविभागं स्थालीपाकस्य जुहोति । स्थालीपाकेषु च ग्रहणासादनप्रोक्षणानि, मन्त्रदेवताभ्यो-ऽवदानधर्माश्च । पूर्वं तु दर्शपूर्णमासाभ्यामन्वारम्भणीयदेवताभ्यो जुहुयादापौर्णमासादर्शस्यानतीतः कालः आदर्शात् पौर्णमासस्य मानराहुतिं चैके सायमाहुतिकालेऽस्ययान्मस्यन्ते, नियतस्त्वेव का-लोऽग्निहोत्रे प्रायश्चित्तदर्शनाद् भिन्नकालस्य नित्याहुत्योर्व्रीहि-यवतन्दुलानामन्यतमद्रविः कुर्वीताभावेऽन्यदप्रतिषिद्धम् । तन्दुलाँ-श्चेत् प्रक्षाल्यैक इतरेषामसंस्कारः । सायमग्नये प्रातस्सूर्याय प्र-जापतये चानुमयं तूष्णीं प्राक् प्रागाहुते समिधमेके,यथोक्तं प-र्युक्षणम् ॥ ३ ॥

उत्थाय प्रातराचम्याहरहः स्वाध्यायमधीयीताथा नो देव स-वितरिति द्वे, अपेहि मनसस्पत इति सूक्तम्, ऋतं च सत्यं चेति भूक्तमादित्या अवहित्यवेति सूक्तशेषः, इन्द्रश्रेष्ठानीत्येकाहंसः शु-चिषदित्येका, नमो मह्द्य इत्येका, यत इन्द्र भयामह इत्येका य-स्त्वमग्नेत्येका, यो मे राजन्नित्येका, ममाग्ने वर्च इति सूक्तं, स्व-स्ति नो मिमीतामिति च पञ्च ॥ ४ ॥

चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति पञ्चमु बाहिः शालाया विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इत्येष लिङ्गं उदगयनेऽग्निं प्रणीय निर्मथ्यैके विवाह उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्यै पाणिं गृह्णीयाद्या लक्षणसंपन्ना स्याद् । यस्या अभ्यासमङ्गानि स्युः । समाः केशान्ताः आवर्तावपि यस्यै स्यातां प्रदक्षिणौ ग्रीवायां षड् वीराञ्जनयिष्यतीति विद्यात् ॥ ५ ॥

वन्ति प्रागग्रे धारयन् वैष्णव्याविस्यभ्युक्ष्य कुशतरुणाभ्यां प्रदक्षिणमग्निं त्रिः पर्युक्ष्य,महीनां पयोऽसीत्याज्यस्थालीमादायैवं त्वेत्यधिश्रित्योर्जे त्वेत्युदगुद्वास्योदगग्रे पवित्रे धारयन्नङ्गुष्ठाभ्यां चोपकनिष्ठकाभ्यां चोभयतः प्रतिगृह्योर्ध्वाग्रे महे कृत्वाज्ये प्रत्यस्यति । सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरित्याज्यसंस्कारः सर्वत्र । नासंस्कृतेन जुहुयाद् स्रुवे चापः सवितुर्व इति ताः प्रणीताः प्रोक्षणीश्च ॥ ८ ॥

स्रुवः पात्रमर्थलक्षणग्रहणम् । सव्येन कुशानादाय दक्षिणेन मूले स्रुवं विष्णोर्हस्तोऽसीति स्रुवेणाज्याहुतीर्जुहोत्युत्तरपश्चार्द्धादग्नेरारभ्याविच्छिन्नं दक्षिणतो जुहोति, त्वमग्ने प्रमतिरिति दक्षिणपश्चार्द्धादग्नेरारभ्याविच्छिन्नमुत्तरतो जुहोति यस्येमे हिमवन्त इत्याग्नेयमुत्तरमाज्यभागं सौम्यं दक्षिणं मध्येऽन्याहुतयोऽग्निर्जनिता स मेऽमूं जायां ददातु स्वाहा, सोमो जनिमान्स माऽमुया जनिमन्तं करोतु स्वाहा, पूषा ज्ञातिमान्स माऽमुष्यै पित्रा मात्रा भ्रातृभिर्ज्ञातिमन्तं करोतु स्वाहेति । नाज्याहुतिषु नित्यावाज्यभागौ स्विष्टकृच्च नित्याहुतिषु चेति माण्डूकेया महाव्याहृतिसर्वप्रायश्चित्तप्राजापत्यान्तरमेतदावापस्थानमाज्ये हविषि सव्ये पाणौ ये कुशास्तान् दक्षिणेनाग्रे संगृह्य मूले,सव्येन तेषामग्रं स्रुवे समनक्ति मध्यमाज्यस्थाल्यां मूले चाथ चेत् स्थालीपाकेषु स्रुच्यग्रं मध्यं स्रुवे मूलमाज्यस्थाल्यां ताननुप्रहृत्याग्नेर्वासोऽसीति तिस्रः समिधोऽभ्याधाय यथोक्तं पर्युक्षणमनाम्नातमन्त्रास्वादिष्टदेवतास्वमुष्यै स्वाहाऽमुष्यै स्वाहेति जुहुयात् स्वाहाकारेण शुद्धेन व्याख्यातः प्रतिश्रुते होमकल्पः ॥ ९ ॥

प्रकृतिर्भूतिकर्मणां सर्वासां चाज्याहुतीनां शालापशूनां चरुपाकयज्ञानां च । त एते प्रयाजा अननुयाजा अनिडा अनिगदा

वयौ- पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां महाव्या-हृतिभिश्चि-स्रा जुहोति समस्ताभिश्चतुर्थीं मति येतैतस्यां चोदनायामेवमना-देशे सर्वेषु भूतिकर्मसु पुरस्ताच्चोपरिष्टाच्चैताभिरेव जुहुयात् ॥११॥

सम्राज्ञी श्वसुरे भवेति पिता भ्राता वास्यग्रेण मूर्द्धनि जुहोति स्रुवेण वा तिष्ठन्नासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखो, गृभ्णामि ते सौभगत्वाय हस्तमिति दक्षिणेन पाणिना दक्षिणं पाणिं गृह्णाति साङ्गुष्ठमुत्तानमेनोत्तानं तिष्ठन्नासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखः पश्च चोत्तरा जपित्वा, अमोहमस्मि सा त्वं सा त्वमस्यऽमोहं, द्यौरहं पृथिवी त्वमृक्त्वमसि सामाहं सा मामनुव्रता भव ताविह विवहावहै प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहूंस्ते सन्तु जरदष्टय इत्युदकुम्भमन्वं भूर्भुवः स्वरिति पूरयित्वा पुन्नाम्नो वृक्षस्य सक्षीरान्त्सपलाशान्त्सकुशानोप्य हिरण्यमिति चैके, तं ब्रह्मचारिणे वाग्यताय प्रदाय प्रागुदीच्यां दिशि ता स्थेयाः प्रदक्षिणा भवन्त्यश्मानं चोत्तरत उपन्याप्ये हि सूनरीप्युत्थाप्या एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरा भव अभितिष्ठ मतन्यतः सहस्व पृतनायतद्-तिदक्षिणेन प्रपदेनाश्मानमाक्रमय्य प्रदक्षिणमग्निं पर्याणीय तेनैव मन्त्रेण द्वितीये वसनं प्रदाय ल जाञ्छमीपलाशमिश्रान् पिता भ्राता वास्यादञ्जलावावपत्युपस्तरणाभिघारणं प्रत्यभिघारणं चाज्येन ताञ्जुहोति ॥ १२ ॥

इयन्नार्युपब्रूते लाजानावपन्तिका शिवा ज्ञातिभ्यो भूयासं चिरं जीवतु मे पतिः स्वाहेति तिष्ठन्ती जुहोति । पतिर्मन्त्रं जपत्यऽश्मक्रमणाद्येवं द्वितीयमेवं तृतीयं तूष्णीं कामेन चतुर्थं प्रागुदीच्यां दिशि सप्तपदानि प्रक्रमयतीष एकपदूर्जे द्विपदी रायस्पोषाय त्रिपद्यायोभव्याय चतुष्पदी पशुभ्यः पञ्चपदृतुभ्यः षट्पदी सखा सप्तपदी भवेति । तान्यद्भिः शमयत्यापोहिष्ठीयाभिस्तिसृभिः स्थे-

करोम्यसौ स्वाहेति वा प्रथमया महाव्याहृत्या प्रथमोपहिता द्वितीयया द्वितीया तृतीयया तृतीया समस्ताभिश्चतुर्थी घोरचक्षुरित्याज्यलेपेन चक्षुषी विमृजीत, कयानश्चित्र इति तिसृभिः केशान्तानभिमृश्येतस्यादित्याभिपजेतिचतस्रोऽनुद्रुत्यान्ते स्वाहाकारेण मूर्द्धनि संस्रावमत्र हैके कुमारमुत्तङ्गमानयन्त्युभयतः सुजात मा ते योनिमित्येतयाऽपि वा तूष्णीं तस्याऽञ्जलौ फलानि दत्वा पुण्याहं वाचयति पुंसवतीह भवतीहैवस्तमिति सूक्तशेषेण गृहान् प्रपादयन्ति ॥ १६ ॥

दधिक्राव्णोअकारिषमिति दधि संपिबेयातां वाग्यतावासीयातामाध्रुवदर्शनादस्तमिते ध्रुवं दर्शयति ध्रुवैधि पोष्यामयीति, ध्रुवं पश्यामि प्रजां विदेयेति ब्रूयात् त्रिरात्रं ब्रह्मचर्यं चरेयातामधःशायीयातां दध्योदनं संभुञ्जीयातां पिबतं च तृष्णुतं चेति तृचेन सायं प्रातर्वैवाहमग्निं परिचरेयातामग्नये स्वाहाऽग्नये स्विष्टकृते स्वाहेति. पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ पुमानिन्द्रश्चाग्निश्च पुमांसं वर्ततां मयि स्वाहेति पूर्वा गर्भकामा दशरात्रमविप्रवासः॥१७॥

अथ चतुर्थीकर्म । त्रिरात्रे निर्वृत्ते स्थालीपाकस्य जुहोति, अग्ने प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या पतिघ्नी तनूस्तामस्या अपजहि । वायो प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या अपुत्रिया तनूस्तामस्या अपजहि । सूर्य प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या अपशव्या तनूस्तामस्या अपजहि । अर्यमणं नु देवं कन्या अग्निमयक्षत सेमां देवो अर्यमा प्रेतो मुञ्चातु मामुतः । वरुणं नु देवं कन्या अग्निमयक्षत सेमां देवो वरुणः प्रेतो मुञ्चातुमामुतः । पूषणं नु देवं कन्या अग्निमयक्षत सेमां देवो पूषा प्रेतो मुञ्चातु मामुतः । प्रजायस्व इति सप्तमी, सौविष्टकृत्यष्टमी ॥ १८ ॥

अथाण्डामुष्कं पेषयित्वर्तुवेलायां, मुदीर्ष्वातः पतिवतीति द्वाभ्यामन्ते स्वाहाकाराभ्यां नस्तो दक्षिणतो निषिञ्चेत् । गन्धर्वस्य विश्वावसोर्मुखमसीत्युपस्थम् अञ्जनयिष्यमाणोऽभिमृशेत् । समाप्ते अर्थे जपेत् । प्राणे तत्रे रेतो दधाम्यसावित्यनुप्राण्याद् । यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रे गर्भिणी वायुर्यथा दिशां गर्भ एवं गर्भं दधामि तेऽसाविति वा । आ ते योनिं गर्भ एतु पुमान् बाण इषुधिम् आ वीरो अत्र जायतां पुत्रस्ते दशमास्यः । पुमांसं पुत्रं जनय तं पुमाननुजायतां तेषां माता भविष्यसि जातानां जनयासि च पुंसि वै पुरुषे रेतस्तत्स्त्रियामनूपि च तु तथा तदब्रवीद्धाता तत्प्रजापतिरब्रवीत् । प्रजापतिर्व्यदधात् सविता व्यकल्पयत् । स्त्रीषूयमन्यास्व दधत्पुमांसमादधादिह । यानि भद्राणि बीजानि पुरुषा जनयन्ति नः तेभिष्ट्वं पुत्रं जनय सुप्रसूर्धेनुका भव । अभिक्रन्द वीळय स्वगर्भमाधेहि साधय वृषाणं वृषन्नाधेहि प्रजायै त्वा हवामहे । यस्य योनिं पतिरेतो गृभाय पुमान् पुत्रो धीयतां गर्भे अन्तः तं पिपृहि दशमास्योऽन्तरुदरे स जायताम् । श्रेष्ठ्यतमस्यानामिति वा ॥ १९ ॥

तृतीये मासि पुंसवनं पुष्येण श्रवणेन वा सोमांशुं पेषयित्वा कुशकण्टकं वा न्यग्रोधस्य वा स्कन्धस्यान्त्यां शुङ्गां यूपस्य वाऽग्निष्टां संस्थिते वा यज्ञे जुह्वः संस्रावमग्निना रयिं तन्नस्तुरीयं समिद्धाग्निर्वनवत्स्पशाङ्गरूप इति चतसृभिरन्ते स्वाहाकाराभिर्नस्तो दक्षिणतो निषिञ्चेत् ॥ २० ॥

चतुर्थे मासि गर्भरक्षणम् । ब्रह्मणाग्निः संविदान इति षट् स्थालीपाकस्य हुत्वाऽक्षीभ्यां ते नासिकाभ्यामिति मन्त्रमाज्यलेपेनाङ्गान्यनुविमृज्य ॥ २१ ॥

सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनम् । स्नातामहतवाससं

पश्च दग्नेरुपोदयमानारभ्याया महाव्याहृतिभिर्हुत्वा स्थालीपाकं श्र-पयित्वा मुद्गौदनमित्येके पुत्रदुपकर्माणि स्युर्नक्षत्रं च धाता द-दातु दाशुषे प्राचीं जीवातुमक्षितिं वयं देवस्य धीमहि सुमतिं सत्यधर्मणः धाता प्रजाया उतराय ईशे धातेदं विश्वं भुवनं जजान धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवज्जुहोतेति नेजे-मेष परापतेति तिस्रः प्रज पत इति षष्ठी त्रिः श्वेतया शलल्या दर्भ-सूत्या गोदुम्बरशलाटुभिः सह मध्ये मूर्ध्नि सीमन्तमुन्नयति भूर्भुवः स्वरित्युत्सङ्गे निधाय त्रिवृतिः प्रतिमुच्य कण्ठे बध्नात्ययमूर्जावतो वृक्ष ऊर्जीव फलिनी भवेत्यथाह वीणागाथिनो राजानं संगायतेति यो वाऽन्यो वीरतर इत्युदपात्रेऽक्षतानवनिनीय विष्णुर्योनिं क-ल्पयतु एकामहामति षड्भ्रुवेन पाययेदथास्या उदरमभिमृशेत् सु-पर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रं चक्षुः छन्दास्यङ्गानि यजूँ-षि नाम साम ते तनूः मोदमानौ गापयेन्महादेहमर्तो वा ऋषभो दक्षिणा ॥ २२ ॥

काकातन्या मयकचातन्याः कोशातक्या बृहत्याः कालकीत-कस्येति मूलानि पेषयित्वोपलेपयेद्देशं यस्मिन् प्रजायेत रक्षसा-मपहत्यै ॥ २३ ॥

अथ जातकर्म । जातं कुमारं त्रिरभ्य वान्यानुमाण्यादृचा प्रा-णि हि यजुषा समर्शिहि साम्नोदनं हीति । सर्पिर्मधुनी दध्युदके च सन्निनीय त्रं हिरण्यं वा संनिघृष्य त्रिः प्राशयेज्जातरूपेण प्र ते यच्छामि मधुमन्मखाय वेदं प्रसूतं सवित्रा मघोना आयुष्मान् गुपितोम देवताभिः शतं जीव शरदो लोके अस्मिन्नित्यसाविति नामास्य दधाति घोषवदाद्यन्तरन्तःस्थं द्व्यक्षरं चतुरक्षरं वाऽपि वा षडक्षरं कृतं कुर्यान्न तद्धितम् । तदस्य पिता माता च विद्यातां दशम्यां स्थापयहारिक ब्राह्मणतुष्टे गोः कृष्णस्य शुक्लकृष्णानि

लोहितानि च रोमाणि सर्वं कारयित्वैतस्मिन्नेव चतुष्टये सन्निनीय चतुः प्राशयेदिति माण्डूकेयो भूरृग्वेदं त्वयि दधाम्यसौ स्वाहा भुवः स्वर्कोवाक्यमितिहासपुराणमों सर्वान् वेदाँस्त्वयि दधाम्यसौ स्वाहेति वा। मेधाजननम्।दक्षिणे कर्णे वागिति त्रिः । वाग् देवी मनसा संविदाना प्राणेन वत्सेन, भुवो यजुर्वेदं त्वयि दधाम्यसौ स्वाहा स्वः सामवेदं त्वयि दधाम्यसौ स्वाहेति प्रोक्ता जुपती त्वा सौमनसाय देवी मही मन्द्रावाणी वाणीचीः सलिला स्वयम्भूरिति चानुमन्त्रयेत शणसूत्रेण विग्रथ्य जातरूपं दक्षिणे पाणावपिनह्योत्थानादूर्ध्वं दद्यात्स्या ब्राह्मणेभ्यो दद्यादमा वा कुर्वीत ॥ २४ ॥

दशरात्रे चोत्थानादूर्ध्वं मातापितरौ शिरःस्नातावहतवाससौ कुमारश्चैतस्मिन्नेव सूतिकाग्नौ स्थालीपाकं श्रपयित्वा जन्मतिथिं हुत्वा त्रीणि च भानि सदैवतानि तन्मध्ये जुहुयाद्यस्मिन् जातः स्यात् पूर्वं तु दैवतं सर्वत्रा आयुष्टे अग्न गीर्भिरग्नग्निर्वरेण्यः आयुर्नो देहि जीवसे आयुर्दा हविषा दधानो घृतप्रतीको घृतयोनिरेधि घृतं पीत्वा मधुचारु गव्यं पितेव पुत्रमिह रक्षतादिममिति । सोम मद्दे धनमिति दशमीस्थालीपाकस्य नामधेयं प्रकाश कृत्वा ब्राह्मणान् स्वस्ति वाच्यैवमेव मासि मासि जन्मतिथिं हुत्वोर्ध्वं संवत्सराद् एषोऽग्नौ जुहोति ॥ २५ ॥

अग्नये कृत्तिकाभ्यः प्रजापतये रोहिण्यै सोमाय मृगशिरसे रुद्रायार्द्राभ्योदितये पुनर्वसुभ्यां बृहस्पतये पुष्याय सर्पेभ्यो श्लेषाभ्यः पितृभ्यो मघाभ्योगभगाय फाल्गुनीभ्यामर्यम्णे फल्गुनीभ्यां सवित्रे हस्ताय त्वष्ट्रे चित्रायै वायवे स्वातय इन्द्राग्निभ्यां विशाखाभ्यां मित्रायानुराधायां इन्द्राय ज्येष्ठायै निर्ऋत्यै मूलायाऽद्भ्योऽपाढाभ्यो ब्राह्मणेऽभिजिते विष्णवे श्रवणाय वसुभ्यो धनिष्ठाभ्यो वरुणाय शतभिषजेऽजायैकपदे प्रोष्ठपदाभ्योऽहिर्बु-

ध्न्याय प्रोष्ठपदाभ्यः पूष्णे रेवत्या अश्विभ्यामश्विनीभ्यां यमाय भरणीभ्यः ॥ २६ ॥

षष्ठे मास्यन्नप्राशनम् । आजमन्नाद्यकामस्तैत्तिरं ब्रह्मवर्चसकामो मात्स्यं जवनकामो घृतौदनं तेजस्कामो दधिमधुघृतमिश्रमन्नं प्राशयेत् । अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः प्रप्रदातारं तारिष ऊर्जन्नो धेहि द्विपदे चतुष्पदे यश्चिद्धि महश्चित् । इममग्न आयुषे वर्चसे तिग्ममोजो वरुणसोमराजन् मातेवास्मा अदितिः शर्मयं सद्विश्वेदेवा जरदष्टिर्यथा सदिति हुत्वाऽग्न आयूंषीत्यभिमन्त्र्योदगग्रेषु केशेषु, स्योना पृथिवि भवेत्युपवेश्य, महाव्याहृतिभिः प्राशनं शेषं माता प्राश्नीयात् ॥ २७ ॥

संवत्सरे चूडाकर्म तृतीये वा वर्षे, पञ्चमे क्षत्रियस्य, सप्तमे वैश्यस्याग्निमुपसमाधाय व्रीहियवानां तिलमाषाणामिति पात्राणि च पूरयित्वानडुहं च गोमयं कुशमिश्रं च केशप्रतिग्रहणादशनवनीतं लोहक्षुरं चोत्तरत उपस्थाप्य संपृच्यध्वम् ऋतावरीरूर्मिणा मधुमत्तमाः पृञ्चती मधुना पयो मन्द्रा धनस्य सातय इत्युष्णास्वप्सुशीता आसिञ्चति । आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषं यद्देवानाम् त्र्यायुष तत्ते करोमि त्र्यायुषमित्यपस्ताविति शीतोष्णाभिरद्भिर्दक्षिणं केशपक्षं त्रिरभ्यनक्ति शल्लयैके विजटान् वा कृत्वा नवनीतेनाभ्यज्यौ ओषधे त्रायस्वैनमिति कुशतरुणमन्तर्दधाति केशान् कुशतरुणं चादर्शेन संस्पृश्य, तेजोऽसि स्वधितिष्टेपिता मैनं हिंसीरिति लोहक्षुरमादत्ते । येनावपत् सविता श्मश्रुम्रे क्षुरेण राज्ञो वरुणस्य विद्वान् येन धाता बृहस्पतिरिन्द्रस्य चावपच्छिरः तेन ब्रह्माणो वपनेदमस्यायुष्मान् दीर्घायुरयमस्तु वीरोऽसाविति केशाग्राणि छिनत्ति कुशतरुणं चैवं द्वितीयमेवं तृतीयमेवं

द्विरवरतो निकक्षयोः षष्ठे सप्तमे गोदानकर्मण्येतदेव गोदानकर्म धनूद्राकर्म षोडशे वर्षेऽष्टादशे वा तृतीये तु प्रवपने गां ददात्यहतं च वासस्तूष्णीमावृतः कन्यानां प्रागुदीच्यां दिशि यद्दोषधिके देशेऽपां वा समीपे केशान्निखनन्ति नापिताय धान्यपात्राणि नापिताय धान्यपात्राणि ॥ २८ ॥ इति प्रथमोऽध्यायः ॥

ॐ गर्भाष्टमेषु ब्राह्मणमुपनयीतैणेयेनाजिनेन गर्भदशमेषु वा गर्भैकादशेषु क्षत्रियं रौरवेण गर्भद्वादशेषु वैश्यं गव्येनाषोडशाद् वर्षाद् ब्राह्मणस्यानतीतः काल आद्वाविंशात् क्षत्रियस्यात ऊर्द्ध्वं पतितसावित्रीका भवन्ति । नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्व्यवहरेयुरहतेन वा सर्वाम्मेखलिनो मौञ्जी मेखला ब्राह्मणस्य धनुर्ज्या क्षत्रियस्यौर्णासूत्री वैश्यस्य, पालाशो बैल्वो वा दण्डो ब्राह्मणस्य नैयग्रोधः क्षत्रियस्यौदुम्बरो वैश्यस्य, प्राणसंमितो ब्राह्मणस्य ललाटसंमितः क्षत्रियस्य केशसंमितो वैश्यस्य । सर्वे वा सर्वेषाम् । येनावद्धेनोपनयेतत्वार्याधीनं तत्परिवाप्योपनेयस्यादापुन्याल्ङ्कृत्य जघनेनाग्निं तिष्ठतः प्राङ्मुख आचार्यस्तिष्ठतिइत्यमुपनयम् ॥ १ ॥

इयं दुरुक्तात् परिबाधमाना वर्णं पवित्रं पुनती न आगात् प्राणापानाभ्यां बलमाविशन्ती सखा देवी सुभगा मेखलेयमिति त्रिर्मेखलां प्रदक्षिणं त्रिः परिवेष्ट्य ग्रन्थिरेकस्त्रयोऽपि वाऽपित्रा पञ्च यज्ञोपवीतं कृत्वा यज्ञोपवीतमसि यज्ञस्य त्वेनोपनयामीत्यञ्जली पूरयित्वायैनमाह को नामासीत्यसावहं भो इतीतरः समानाऽऽर्षेय इत्याचार्यः समानार्षेयोऽहं भो इतीतरो ब्रह्मचारी भवान् ब्रूहीति ब्रह्मचार्यहं भो इतीतरो भूर्भुवःस्वरित्यस्याञ्जलावञ्जलींस्त्रीन् आसिच्य दक्षिणोत्तराभ्यां पाणिभ्यां पाणी संगृह्य जपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयाम्य-

ऽसाविति गणानां त्वेति गणकामानाऽगन्तामारिषण्यते तियोधान्महाव्याहृतिभिर्व्याधितान् ॥ २ ॥

भगस्ते हस्तमग्रहीत् सविता हस्तमग्रहीत् पूषा ते हस्तमग्रभीदर्यमा हस्तमग्रभीन्मित्रस्त्वमसि धर्मणाग्निराचार्य्यस्तव असावहं चोभावग्न एतं ते ब्रह्मचारिणं परिददामीन्द्रैतत्ते ब्रह्मचारिणं परिददामि विश्वेदेवा एतं वो ब्रह्मचारिणं परिददामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय रायस्पोषाय सर्वेषां वेदानामाधिपत्याय सुश्लोक्याय स्वस्तये ऐन्द्रीमावृतमावर्त आदित्यस्यावृतमन्वावर्त इति दक्षिणं बाहुमन्वावृत्त्य दक्षिणेन प्रादेशेन दक्षिणमंसमन्वारब्धत्यारिष्यतस्ते हृदयस्य मियो भूयासमिति हृदयदेशमभिमृशति तूष्णीं ममव्यं पर्यावृत्याथास्योर्ध्वाङ्गुलिं पाणिं हृदये निधाय जपति ॥ ३ ॥

मम व्रते हृदयं ते दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वानि युनक्तु मह्यमिति कामस्य ब्रह्मवर्चस्यासाविति तेनैव मन्त्रेण तथैव पर्यावृत्त्य दक्षिणेन प्रादेशेन दक्षिणमंसमन्वारभ्य जपति ब्रह्मचार्यसि समिधमाधेयपोशानकर्मकुरुमादिवा वाचं पच्छासमिदाधानादेषा ते अग्ने समिदित्यभ्यादधाति समिधं तूष्णीं वा ॥ ४ ॥

संवत्सरे सावित्रीमन्वाह त्रिरात्रे अन्वक्षं वा गायत्रीं ब्राह्मणायानुब्रूयात् त्रिष्टुभं क्षत्रियाय जगतीं वैश्याय सावित्रीं त्वेवोत्तरेणाग्निमुपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः । अधीहि भोऽ इत्युक्त्वाचार्य ॐकारं प्रयुज्याथेतर वाचयति सावित्रीं भो अनुब्रूहीत्यथास्मै मन्त्राह तत्सवितुर्वरेण्यमित्येतां पच्छोऽर्द्धर्चशोऽनवानम् ॥ ५ ॥

आपो नाम स्थ शिवा नाम स्थोर्जा नाम स्थाऽजरा नाम

स्वोऽपथा नामस्थाऽमृता नामस्य तासां त्रोहीय सुमतौ मायचेत्येव त्रिरप आचमय्य स्वस्ति नो मिमीतामिति पञ्चर्चेन दण्डं प्रयच्छति वरो दक्षिणा मदक्षिणमग्निं पर्यास्थीत्य भिक्षते ग्रामं मातरं रोन मथमां या चैनं न प्रत्याचक्षीताचार्याय भैक्ष्यं निवेदयित्वाऽनुज्ञातो गुरुणा भुञ्जीताहरहः समिदाधानं भिक्षाचरणमधः शय्यां गुरुशुश्रूषेति ब्रह्मचारिणो नित्यानि ॥ ६ ॥

अथानुवाचनस्याग्नेरुत्तरत उपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरोऽभिवाद्य पादावाचार्यस्य दक्षिणेन जानुनाक्रम्य भूमे कुशतरुणान् दक्षिणोत्तराभ्यां पाणिभ्यां मध्ये परिगृह्य तां सव्येनाचार्योऽग्रे संगृह्य दक्षिणेनाद्भिः परिपिञ्चन्नपेतरं वाचयति सावित्रीं भो ३ अनुब्रूहीतीतरः सावित्रीं ते अनुब्रवीमीत्याचार्यो गायत्रीं भो ३ अनुब्रूहीतीतरो गायत्रीं ते अनुब्रवीमीत्याचार्यो वैश्वामित्रीं भो३ अनुब्रूहीतीतरो वैश्वामित्रीं ते अनुब्रवीमीत्याचार्यो ऋषीं भो ३ अनुब्रूहीतीतर ऋषींस्ते अनुब्रवीमीत्याचार्यो देवता भो ३ अनुब्रूहीतीतरो देवतास्ते अनुब्रवीमीत्याचार्यः श्रुतिं भो३ अनुब्रूहीतीतरः श्रुतिं ते अनुब्रवीमीत्याचार्यः श्रद्धामेधे भो ३ अनुब्रूहीतीतरः श्रद्धामेधे अनुब्रवीमीत्याचार्य एवमेवमृषयोऽस्य यस्य यो यो मन्त्रो यद्देवत्यो यच्छन्दाश्च तथा तं तं मन्त्रमनुब्रूयादपि वा विदन्नृषिदैवतच्छन्दांसि तत्सवितुर्वरेण्यमित्येतां पच्छोऽर्द्धर्चशो ननानमित्यपेति समाप्त आचार्य एवमेकैकमृषिमनुवाकं वाऽनुब्रूयात् सूक्तमृक्कंभनुवाकं पावद्वा गुरुर्मन्येतायोतमेकामं सूक्तं वाऽनुब्रूयादयेरनुवाकस्य चैकैकां सूक्तां दाविदैया मभ्यानेरनि कामं सूक्तादाचार्य इत्येवदोषस्याध्याये व्याख्याने कुशतरुणानादाया-ऽऽनडुहेन मूत्रे पुण्डं कृत्वा यथासूक्तं कुशोपरि निधिप्सव्यदःशेषं स्थानपुण्यवाच्य ॥ ७ ॥

अपराह्णेऽक्षतधाना भिक्षित्वाऽऽज्याहुतिधर्म्मेणाग्नौ पाणिना जुहुयात् सदसस्पतिमद्भुतमिति प्रत्यृचः सूक्तशेषेण मक्षैराचार्यं स्वस्तिवाच्य ॥ ८ ॥

अरण्ये समित्पाणिः सन्ध्यामास्ते नित्यं वाग्यत उत्तरापराभिमुखोऽन्वष्टमदेशमा नक्षत्राणां दर्शनादतिक्रान्तायां महाव्याहृतीः सावित्रीं स्वस्त्ययनानि च जपित्वैवं प्रातः प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनात् ॥ ९ ॥

उदिते माध्ययनमहरहः सायं प्रातरग्निमुपसमाधाय परिसमूह्य पर्युक्ष्य दक्षिणं जान्वाच्याग्नये समिधमाहार्षं बृहते जातवेदसे स मे श्रद्धां च मेधां च जातवेदाः प्रयच्छतु स्वाहा । एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि स्वाहा । समिद्धो मां समर्द्धय प्रजया च धनेन च स्वाहा । एषा ते अग्ने समित्तया वर्द्धस्व चाचप्यायस्व वर्द्धिषीमही च वयमाचप्यासिषीमहि स्वाहेत्यथ पर्युक्ष्याग्निं श्रद्धां च मेधां चाविनिपातं स्मृतिं च मे ईक्षितो जातवेदा अयं शुनन्नः संप्रयच्छत्वित्यग्निमुपतिष्ठते । सौपर्णव्रतभाषितं दृष्टवृद्धसम्प्रदायानुष्ठितं त्र्यायुषं पञ्चभिर्मन्त्रैः प्रतिमन्त्रं ललाटे हृदये दक्षिणस्कन्धे वामे च ततः पृष्ठे च पञ्चसु भस्मना त्रिपुण्ड्रं करोति स एतेषां वेदानामेकं द्वौ त्रीन् सर्वान् वाऽधीते य एवं हुत्वाग्निमुपतिष्ठते ॥ १० ॥

अथ व्रतादेशनम् । तस्योपनयनेन कल्पो व्याख्यातो न सावित्रीमन्वाह । दण्डप्रदानान्तमित्येके । उदगयने शुक्लपक्षेऽहोरात्रं ब्रह्मचर्य्यमुपेत्याचार्योऽमांसाशी ब्रह्मचारी चतुर्दशीं परिहाप्याष्टमीं चाद्योत्तमे चैके यां वान्यां प्रशस्तां मन्येत तस्यां शुक्रिये ब्रह्मचर्य्यमादिशेत् त्रिरात्रं ब्रह्मचर्यं चरेद् द्वादशरात्रं सम्वत्सरं वा यावद्वा गुरुर्मन्येत शाकरं तु संवत्सरं व्रातिकमौपनिषदं च पूर्णे काले

चरिते ब्रह्मचर्ये संपोर्वाहस्पत्यान्ते वेदेऽनूक्ते रहस्यं श्रावयिष्यन् कालनियमं चादेशेन मतीयेत ॥ ११ ॥

कृतमातराशस्यापराह्णेऽपराजितायां दिशि हुत्वाचार्योऽथैनं पास्वेव देवतासु परीतो भवति तास्वेवैनं पृच्छत्यग्नाविन्द्र आदित्ये विश्वेषु च देवेषु चरितं ते ब्रह्मचर्यमिति चरितं भोः इति मत्युक्ते पश्चादग्ने पुरस्तादाचार्यस्य प्राङ्मुखे स्थितेऽहतेन वाससाचार्यः प्रदक्षिणं मुखं त्रिः परिवेष्ट्योपरिष्टाद्दशां कृत्वा यथा न संभ्रश्येत त्रिरात्रं समिदाधानं भिक्षाचरणमधः शय्यां गुरुशुश्रूषां चाकुर्वन्नागतोऽप्रमत्तोऽरण्ये देवकुलेऽग्निहोत्रे चोपवसस्वेत्यत्र हैके तानेव नियमाँस्तिष्ठतो राज्यामेवोपदिशन्त्याचार्योऽमांसाशी ब्रह्मचारी त्रिरात्रे निवृत्ते राज्यां वा ग्रामान्निष्क्रामन्नेतानीक्षेतानध्याय पान् पिशिताशं चण्डालं सूतिकां रजस्वलां तेदनिमपहस्तकाँछूपशानं सर्वाणि च शवरूपाणि यान्यास्येन प्रविशेयुः स्वस्यवासां निरसन्नुदित आदित्येऽनुश्रावनवर्मेण वाग्यतायोष्णीषिणेऽन्वाह महानाम्नीष्वेवैष नियमोऽयोत्तरेषु प्रकरणेषु स्वाध्यायमेव कुर्वत आचार्यस्येतरः शृणोत्युष्णीषभाजं दक्षिणा गां ददाति स्वतमित्युपादिवीति च प्रणवेन वा सर्वमर्हके वैश्वदेवं चरुं कुर्वते सर्वेषु प्रकरणेषु यथापरीतमिति माण्डूकेयः ॥ १२ ॥

अथातो दण्डनियमानान्तरा गमनं कुर्यादात्मनो दण्डस्य चाय चेद्दण्डमेखलोपवीतानामन्यतमाद्विशीर्येत छिद्येत वा तस्य तत्मापश्चित्तं यदुद्राह रयस्य मेखलाचेदसन्धेया भवत्यन्यां कृत्वानुमन्त्रयेत ।

मेध्यामेध्यविभागज्ञे मेधि देविमरस्वति ।

मेखले स्कन्नमाच्छिद्रं सन्तनुष्व व्रतं मम ॥ त्वमग्ने व्रतभृच्छुचिरग्ने देवाँ इहावह । उपयज्ञं हविश्च नः व्रतानि विभ्रद् व्रतपा

